॥ गोकर्ण गणधिपस्तुती ॥

श्रीमत्परमहंसेत्यादि समस्तबिरुदालङ्कृत श्रीजगद्गुरु
सार्वभौम श्रीश्री शिवाभिनव नृसिंह भारती महास्वामिरनुग्रहीता

कुक्षिस्फुरन्नागभीत्या मूषिकः प्रपलायते ।
इति मत्वा मयूरं किमारूढोऽसि गनाधिप ॥ १॥

मत्कुक्षिसुस्थमखिलजगदिति सर्वान् प्रबोधयितुम् ।
बृहदुदरतां कृपाब्धे धत्से किम् करिवरास्य त्वम् ॥ २॥

त्वद्दर्शनकृतहासं चन्द्रमसं हन्तुमुद्युक्तम् ।
त्वामनुनेतुं ताराः कुसुमव्याजेन सेवन्ते ॥ ३॥

यज्जातुर्येण हि लोकानुद्धर्तुमम्बिकानाथः ।
गोकर्णे स्थितिमकरोल्लोकहितं तं प्रणौमि विघ्नेशम् ॥ ४॥

॥ इति श्रीगणाधिपस्तुतिः सम्पूर्णा ॥